१४॥ कीदृशा । अहंकारस्तस्यापि चेत्तत्राह । पुरोहित्वा वारणमात्रेणेति । मया ज्योतिष्टोमः कृतो मया अश्वमेधः कृत इत्यभिनिवेशपूर्वकं कर्मणाम भिलापः कृतस्तादृशा शक्रेण वा रणमात्रेणैवेत्यर्थः । ननु तेन यथा तेन अहंकारः कृतो तत्तु नरनारायणयोर्भ्यां चेदहंकारो न कृतस्तत्राह । अहंकारकृत इति । निश्चयश्चान्यत्र इतीति भावः ॥ २६॥ किंवा किंफलमिति । तपो बलेन कृतं तेषु युद्धे पुण्यं विना प्राप्यस्य सम्पूर्णत्वात् । त्रिविधः सात्त्विकादि भेदेन ॥ २७॥ २८॥ कारणेन विनेति । कारणेनाहंकारेण विना रहितं कार्यं जगद्रूपं नैव भवतीति निश्चयस्तस्मादाजन्मस्थायायदि निश्चितमहंकारकृतं युद्धं न भवन्त्येव निश्चय इति तत्सम्यगेव इति भावः । यद्यद्वेष्टितं तत्सर्वमहंकारेणैवेत्याह । तपोदानमिति ॥ २९॥ २०॥ २१॥ २२॥ २३॥ २४॥ ॥

अहंकारभवात्पापात्पातितः पृथिवीतले । यज्ञकृद्दानकर्ता च धार्मिकः पृथिवीपतिः ॥ १५॥ पुरोहित्वा वारणमात्रेण पातितो वज्रपाणिना । अहंकारकृतं युद्धं न भवन्त्येव निश्चयः ॥ १६॥ किंफलं तस्य युद्धस्य मुनेः पुण्यं विना कृतम् ॥ व्यासः ॥ राजंस्तु संसारमूलं हि त्रिविधः परिकीर्तितः ॥ १७॥ अहंकारस्तु सर्वत्र मुनिभिर्धर्मनिश्चयैः । सकथं मुनिना त्यक्तुं योग्यो देहभृता किल ॥ १८॥ कारणेन विना कार्यं न भवन्त्येव निश्चयः । तपो दानं तथा यज्ञाः सात्त्विकास्तु भवन्ति ते ॥ १९॥ राजसाद्वा महाभाग तामसाः कलहस्तथा । क्रियास्वल्पापि राजेन्द्र नाहंकारं विना क्वचित् ॥ २०॥ शुभा वाप्यशुभा वापि प्रभवन्त्यपि निश्चयः । अहंकाराद्बन्धकारी नान्योस्ति जगतीतले ॥ २१॥ येनेदं रचितं विश्वं कथं तद्रहितं भवेत् । ब्रह्माहं द्रस्तथा विष्णुरहंकारयुतास्त्वमी ॥ २२॥ अन्येषां चैव का वार्ता मुनीनां वसुधाधिप । अहंकाराश्रितं विश्वं भ्रमतीदं चराचरम् ॥ २३॥ पुनर्जन्म पुनर्मृत्युः सर्वं कर्मवशानुगम् । देवतिर्यङ्मनुष्याणां संसारेस्मिन्महीपते ॥ २४॥ रथांगवद्भ्रमत्यर्थं भ्रमणं सर्वदा स्मृतम् । विष्णुरप्यवताराणां संख्या जानाति कः पुमान् ॥ २५॥ वितते स्मिन्स्तु संसारे उत्तमाधममध्यमः नारायणोहरिः साक्षान्मात्स्यं वपुरुपाश्रितः ॥ २६॥ कामठं सौकरं चैव नारसिंहं च वामनम् । युगे युगे जगन्नाथो वासुदेवो जनार्दनः ॥ २७॥ अवतारान्करोति विविधान्पश्यति विधियन्त्रितः । वैवस्वते महाराज सप्तमे भगवान्हरिः ॥ २८॥ मन्वन्तरे वतारान्वै चक्रे तान्शृणु तत्त्वतः । भृगुशापान्महाराज विष्णुर्देववरः प्रभुः ॥ २९॥ अवतारानने कांस्तु कृतवानखिलेश्वरः ॥ राजोवाच ॥ संदेहोयं महाभाग हृदये मम

भ्रमणं सर्वदा स्मृतमिति । अहंकारेणैवेत्यर्थः । विष्णोरप्यवताराणामिति । अहंकाराभिनिवेशादेव विष्णोरवताराये जातास्तेषां संख्या इत्यर्थः ॥ २५॥ २६॥ २७॥ २८॥ २९॥ प्रश्नबीजमुपलभ्य राजोवाच । संदेहोयमिति ॥ ३०॥ ॥ ॥ ॥ ॥ ॥

श्रीः॥

३१॥३२॥ यदेति, अभवदिति शेषः। संख्यं युद्धम्॥३३॥३४॥३५॥३६॥३७॥३८॥३९॥४०॥ ४१॥४२॥४३॥ ४४॥ ४५॥ यावन्नच्यावयंति वै इति यावदे

भृगुपत्नी भगवता विष्णुना कथं पुरा पितामह, हरिणा च मुनेः पत्नी सा विध्वस्ता किं कृतं मुने, ३१॥ यद्वा शापाद्भृगोः प्राप्तो विष्णुर्देवनमस्कृतः॥ व्यासः॥ शृ

णु राजन्प्रवक्ष्यामि भृगोः शापस्य कारणम्॥३२॥ पुरा कश्यपदायादो हिरण्यकशिपुर्नृपः। यदा तदा सुरैः सार्धं कृतं संख्यं परस्परम्॥३३॥

कृते संख्ये जगत्सर्वं व्याकुलं समजायत, हते तस्मिन्नृपे राजा प्रह्लादः समजायत॥३४॥ देवान्स पीडयामास प्रह्लादः शत्रुकर्षणः। संग्रामोऽ

भवद्घोरः शक्रप्रह्लादयोस्तदा॥३५॥ पूर्णं वर्षशतं राजंल्लोकविस्मयकारकम्। देवैः कृते पुरा युद्धे प्रह्लादस्तु पराजितः॥३६॥ निर्वेदंप

रमं प्राप्तो ज्ञात्वा धर्मं सनातनम्। विरोचनसुतं राज्ये प्रतिष्ठाप्य बलिं नृप॥३७॥ जगाम स तपस्तप्तुं पर्वते गंधमादने। प्राप्य राज्यं ब

लिः श्रीमान्सुरैर्वैरं चकार ह॥३८॥ ततः परस्परं युद्धं जातं परमदारुणम्। ततः सुरैर्जिता दैत्या इंद्रेणामिततेजसा॥३९॥ विष्णु

ना च सहायेन राज्यभ्रष्टाः कृतास्तु वा, ततः पराजिता दैत्याः काव्यस्य शरणं गताः॥४०॥ किं त्वं न कुरुषे ब्रह्मन्साहाय्यं नः प्रताप

वान्, स्थातुं न शक्नुमो ह्यत्र विप्र मो रसातलम्॥४१॥ यदि त्वं न सहायोऽसि जातु मंत्रविदुत्तमः॥ व्यासः॥ इत्युक्तः सोऽब्रवीद्दै

त्यान्काव्यः कारुणिको मुनिः॥४२॥ मा भैष्ट धारयिष्यामि तेजसा स्वेन भोः सुराः। मंत्रैस्तथौषधीभिश्च साहाय्यं वः सदैव हि॥

करिष्यामि कृतोत्साहा भवंतु विगतज्वराः॥ व्यासः॥ ततस्ते निर्भया जाता दैत्याः काव्यसमाश्रयात्॥४४॥ देवैः श्रुतस्तु वृत्तां

तः सर्वश्चारमुखात्किल। तत्र संमंत्र्य ते देवाः प्रोचुः ... च परस्परम्॥४५॥ मंत्रं चक्रुः सुसंविग्नाः काव्यमंत्रप्रभावतः। योद्धुं गच्छाम

हे तूर्णं यावन्नच्यावयंति वै॥४६॥ प्रसह्य हत्वा शिष्टांस्तु पातालं प्रापयामहे। दैत्यानभिगमुस्ततो देवाः संहृष्टाः शस्त्रपा

णयः॥४७॥ जग्मुस्तान्विष्णुसहिता दानवान्दंशितोदिताः। वध्यमानास्तु ते दैत्याः संत्रस्ता भयपीडिताः॥४८॥ काव्यस्य

शरणं जग्मू रक्ष रक्षेति चाब्रुवन्। तान्दृष्ट्वा पीडितान्दृष्ट्वा देवैर्दैत्यान्महाबलान्॥४९॥ मा भैष्टेति वचः प्राह मंत्रौषधब

लाद्विभुः, दृष्ट्वा काव्यं सुराः सर्वे त्यक्त्वा तान्प्रययुः किल॥५०॥ इति श्रीदेवीभागवते ... पु ... च ... दशमोऽध्यायः॥१०॥

त्या मंत्रबलेनास्मान्लब्धस्थानाच्च्यावयंति मा वादि त्यर्थः॥४६॥४७॥४८,४९॥ ...प्रययुः किलेति, तान्दैत्यानित्यर्थः॥

५०॥ इति श्रीमद्देवीभागवते तिलके चतुर्थस्कंधे दशमोऽध्यायः॥ १०॥ ॥ ॥ ॥ ॥ ॥ ॥

दे॰ भा॰

१६॥

**श्रीदेव्यै नमः ॥** सप्ताधिके स्वर्पंचाप्यन्त्यधेः शुक्रस्य ऋषेरथ। मंत्रलाभार्थगमनकथा सम्प्रभिहोच्यते ॥ १ ॥ एवं काव्यमंत्रसामर्थ्येव पूर्वं देवेषु गतेषु जितो दैत्यानां हृयकाव्य उवाचेत्याह, तथा गतेष्विति ॥ २ ॥ २ ॥ नचान्यथेत्युक्तमित्यर्थः ॥ ३ ॥ तस्मान्मे तयाविधया तया सामग्र्या नैव पराजयो भविष्यतीत्यभिप्रायेणाह, न मे मंत्रबलमिति, सुरानथ सुरानपि जेतुं समर्था इत्यन्वयः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ इति दैत्यपाठं सुस्टी॰ ४ अ॰ ११

**श्रीदेव्यै नमः ॥ व्यास उ॰ ॥** तथा गतेषु देवेषु काव्यस्तानब्रवीद्वचः। ब्रह्मणा पूर्वमुक्तं यच्छृणुध्वं दानवोत्तमाः ॥ १ ॥ विष्णुर्दैत्यवधे युक्तो हरिष्यति जनार्दनः, वाराहरूपं संस्थाय हिरण्याक्षो यथा हतः ॥ २ ॥ यथा नृसिंहरूपेण हिरण्यकशिपुर्हतः, तथा सर्वान्कृतोत्साहो हनिष्यति न चान्यथा ॥ ३ ॥ न मे मंत्रबलं सम्यक्प्रतिभाति यथा हरिम्, जेतुं यूयं समर्थाः स्म मयात्राताः सुरानथ ॥ ४ ॥ तस्मात्कालं प्रतीक्षध्वं कियन्तं दानवोत्तमाः। अहं मन्त्रार्थं महादेवं प्रव्रजामि वै ॥ ५ ॥ प्राप्य मंत्रान्महादेवादागमिष्यामि सांप्रतम्, युष्मभ्यं तान्प्रदास्यामि यथार्थं दानवोत्तमाः ॥ ६ ॥ **दैत्या ऊचुः ॥** पराजिताः कथं स्थास्यामस्तु पृथिव्यां मुनिसत्तम, प्रहृताभवामोऽद्य बलास्तावत्कालं प्रतीक्षितुम् ॥ ७ ॥ निहता बलिनः सर्वे केचिच्छिष्टाश्च दानवाः, नाद्य युक्ताश्च संग्रामे स्थातुमेवं सुदुःखिताः ॥ ८ ॥ **शुक्र उ॰ ॥** यावदहं मंत्रविद्यामानयिष्यामि शंकरात्, तावद्भवद्भिः स्थातव्यं तपोयुक्तैः शमान्वितैः ॥ ९ ॥ सामदानादयः प्रोक्ता विद्वद्भिः समयोचिताः, देशं कालं बलं वीरैर्ज्ञात्वा प्राज्ञैर्बलं बुधैः ॥ १० ॥ सेवायां समये कार्या प्राज्ञैरात्मशुभकाम्यया। स्वप्रोत्युपचये काले हन्तव्यास्ते मनीषिभिः ॥ ११ ॥ तदद्य विनयं कृत्वा सामपूर्वं कुलेन वै, तिष्ठध्वं स्वनिकेतेषु मदागमनकांक्षया ॥ १२ ॥ प्राप्य मंत्रान्महादेवादागमिष्यामि दानवाः। युध्यामहे पुनर्देवान्मंत्रमास्थाय वै बलम् ॥ १३ ॥ इत्युक्त्वा यथौ गुरुस्तेभ्यो जगाम भृगुनन्दननिश्चयः, महादेवं महाराज मंत्रार्थं मुनिसत्तमः ॥ १४ ॥ दानवाः प्रेषयामासुः प्रह्लादं सुरसन्निधौ, सत्यवादिनमव्यग्रं सुराणां प्रत्ययप्रदम् ॥

ताः शुक्र आह। यावदहमिति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ मंत्रं मंत्रजन्यं बलमास्थायाऽऽश्रित्येत्यर्थः ॥ १३ ॥ भृगुर्भृगुपुत्रः शुक्र इत्यर्थः ॥ १४ ॥ काव्ये गते देवा आगत्यास्मान्नाशयिष्यन्तीति भिया सामार्थं प्रह्लादं प्रेषयामासुरित्याह, दानवा इति ॥ १५ ॥ ॥ १६

नष्टतायुतं न प्रमितार्थः॥ २६ ॥ निःसन्नाहा युद्धार्थं निरुद्योगाः अतो युष्माभिर्वैरं विहाय दयाविधेयेत्यर्थः॥ २७ ॥ सत्यमभिव्याहृतं भाष प्रह्लादस्य तत् श्रुत्वा देवान्प्रवर्तते युद्धादिति पूर्वः॥ मुदिता स्म भवन्तीत्यर्थः॥ २८ ॥ २९ ॥ नापि संयुताः तपःक्रियायुक्ताः॥ १२ ॥ १३ ॥

प्रह्लादस्तु सुरान् प्राह प्रश्रयावनतो नृपः। असुरैः सहितस्तत्र वचनं नयनायुतम्॥ २६ ॥ न्यस्तशस्त्रा वयं सर्वे निःसन्नाहास्तथैव च॥ देवास्तपश्चरिष्यामः संवृता वल्कलैर्युताः॥ २७ ॥ प्रह्लादस्य वचः श्रुत्वा सत्याभिव्याहृतं तु तत्। ततो देवान्यवर्तन्त विज्वरा मुदिताश्च ते॥ २८ ॥ न्यस्तशस्त्रेषु दैत्येषु विनिवृत्तास्तदासुराः। विस्रब्धाः स्वगृहान्गत्वा क्रीडासक्ताः सुसंस्थिताः॥ २९ ॥ दैत्यादंभं समालंब्य तापसा तपसि संयुताः। काव्यं पर्यपास्याश्रमे वासं चक्रुः काव्यागमश्रद्धया॥ २० ॥ काव्यो गत्वाथ कैलासं महादेवं प्रणम्य च। उवाच विधुना पृष्टः किं ते कार्यमिति प्रभुः॥ २२ ॥ मंत्रानिच्छाम्यहं देव यन्न सन्ति बृहस्पतौ। पराजयाय देवानामसुराणां जयाय च॥

व्यासः॥ तच्छ्रुत्वा वचनं तस्य सर्वज्ञः शंकरः शिवः। चिंतयामास मनसा किं कर्तव्यं मनः परम्॥ २३ ॥ सुरद्रोहे बुद्धिरसौ मंत्रार्थी मितः सतां प्रतम्। प्राप्तः काव्यो रहस्ये वै दैत्यानां विजयाय च॥ २४ ॥ रक्षणीया मया देवा इति संचिंत्य शंकरः। दुष्करं व्रतमत्युग्रं तमुवाच महेश्वरः॥ २५ ॥ पूर्णं वर्षसहस्रं तु कणधूममवाक्छिराः। यदि पास्यसि भद्रं ते ततो मंत्रानवाप्स्यसि॥ २६ ॥ इत्युक्तो सौ प्रणम्याथ शंभुं बाढमित्यब्रवीद्वचः। व्रतं चराम्यहं देव त्वयाज्ञप्तः सुरेश्वर॥ २७ ॥ व्यासः॥ इत्युक्त्वा शंकरं काव्यश्चकार व्रतमुत्तमम्। धूमपानरतः शां

असुराणां जयाय चेति। प्रभुः शुक्राचार्य उवाचेति पूर्वः॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अवाक्छिराः सन्कणधूमं यदि पास्यसीत्यर्थः। एतद्व्रतं कठिनमर्थं न करिष्यति। ततो मंत्रानपि न दास्यामीति भावः॥ २६ ॥ २७ ॥ २८ ॥

दे॰भा॰ मंत्रतत्परा विचारनिष्ठाः॥२९॥३०॥३१॥ अन्येतु दैत्यान्प्रत्याजग्मुः सन्नद्धाः सुसज्जा दैत्यकान्॥३१॥ न्यस्तशस्त्राः इति, एतेषु पुरा प्रथमम अभयं दत्त्वा पुनर्जिघांसया नो
हनिष्याम इदं किमित्यर्थः॥३३॥३४॥ कुहकेन कपटेन तेन हेतुना भवतां तयोर्युद्धभावेन वर्तनं तत्प्रसामान्तर्हितानां तेन कारणेन दुष्टान्प्रति दुष्टा भूत्वा युध्यामो स्टी॰ व
युद्धक्रमे इत्यर्थः॥३५॥३६॥३७॥३८॥३९॥ ४० ॥ पदं पदं पद्भ्यां निमन्तुलं त्वल्लक्षीकृत्य गच्छन्तो भिजग्मुः॥४१॥ ४२॥ ॥ ॥ ॥ ॥॥ ग्र॰ ११
१६

ततो देवाः परित्यक्त्वा काव्यं व्रतपरं तदा। दैत्यान्संमरतां श्चैव बद्धुं मंत्रतत्पराः॥२९॥ विचार्य मनसा सर्वे संग्रामायोद्यताः
पुनः। युद्धे ताः युद्धात्तत्र यत्र ते दानवोत्तमाः॥३०॥ तानागतान्समीक्ष्याथ सायुधान्वर्मितांस्तथा। ज्ञात्वा भयसंविग्ना दै
त्या देवान्समन्ततः॥३१॥ उत्पेतुः सहसा सर्वे सन्नद्धा भयकर्षिताः। अब्रुवन्वचनं तत्र ध्यात्वा ते देवान्बलदर्पितान्॥३२॥
न्यस्तशस्त्रा वयं यावत्तिष्ठामो गुरुणा विना। मा स्मयत दत्त्वाभयं पुरा देवाः संप्राप्ता नो जिघांसया॥३३॥ सत्यं वः क्व गतं देवा
धर्मश्च श्रुतिनोदितः। न्यस्तशस्त्रान्हन्तुं भीतान्कस्माद्युद्धाय संगताः॥३४॥ देवाः॥ भवद्भिः प्रेषितः काव्यो मंत्रा
र्थं कुहकेन च। तपो ज्ञातं किंचिदु नः काव्यं तेन युध्यामः यथाशक्ति॥३५॥ सज्जीभवंतु युद्धाय संरब्धाः शस्त्रपाणयः।
शत्रुच्छिद्रे प्रहर्तव्यमिति धर्मः सनातनः॥३६॥ व्यासः॥ तच्छ्रुत्वा वचनं दैत्या विचार्य च परस्परम्। पला
यनपराः सर्वे निर्गता भयविह्वलाः॥३७॥ पुरस्कृत्य दानवा जग्मुर्भीतास्ते काव्यमातरम्। इत्यूचुस्तां
स्तिसंतप्ता अभयं च ददस्व नः॥३८॥ काव्यमातोवाच॥ न भेतव्यं न भेतव्यं भयं त्यजत दानवाः। मत्स
धौ न्निधौ वर्तमानानां न भीर्भवितुमर्हति॥३९॥ तच्छ्रुत्वा वचनं दैत्याः स्थितास्तत्रागतव्यथाः। निरायुधा
श्चासंभ्रान्तास्तत्राश्रमवरे दृढाः॥४०॥ देवास्तान्विद्रुतान्वीक्ष्य दानवांस्ते पदानुगाः। अभिजग्मुः प्र
सह्यैतानविचार्य बलाबलम्॥४१॥ तत्रागता सुराः सर्वे हन्तुं दैत्यान्समुद्यताः। वारिताः
काव्यमात्राथ पिजग्मुः स्तातास्त्रय स्थिताः तान्॥ ४२॥ ॥ ॥ ॥ ॥

१६

